न चोद्यं ( चोदितं ) क्वाऽपि शास्त्रे तदत्र परिनिष्ठितम् ॥ ३९ ॥
अनादिजन्मसम्भूतं पापार्णवमहातपम् । ततुं नान्यत्पणमुखाऽस्ति व्रतानांममकर्म वै
अनेन विधिना कुर्याद् व्रतमेतत्सुदुर्लभम् ।
यथा यथा शक्तिरत्र सिद्धिस्तस्य तथा तथा ॥ ४१ ॥

*मुनय ऊचुः

भगवञ्जैमिने सर्वं वेदवेदाङ्गपारग !। त्वदनुग्रहतोऽस्माभिर्माहात्म्यं जगदीशितुः ॥
क्षेत्रराजस्य तस्यैव यात्राणां चैव सर्वशः । भगवद्भोजनोच्छिष्टप्राशनादिफलं तथा
इन्द्रद्युम्नस्य राज्ञो वै वृत्तान्तमतिदुर्लभम् । नीलमाधवरूपं तु दारुब्रह्मप्रकाशनम् ॥
श्रुतं त्वद्वदनाम्भोजाद्गलितंतद्यथाविधि ।
इदानीं श्रोतुमिच्छामस्त्वत्तोहि वदताम्वर ! ॥४५
सर्वं विस्तरतो ब्रह्मन्वयं सर्वे मुदान्विताः । पुराणश्रवणस्यैव यदुक्तं फलमेव तत् ॥
को वा तस्य विधिश्चैव केन वा स्यात्त साङ्गकम् ।
अस्मासु चेदनुक्रोशो यथावद्वक्तुमर्हसि ॥ ४७ ॥

जैमिनिरुवाच

साधु साधु मुनिश्रेष्ठा! यत्पृष्टं परया मुदा । तत्रमे प्रीतिरतुलाजाता रोमाञ्चकारिणी
तद्वः सर्वं प्रवक्ष्यामि शृणुध्वं सावधानतः । पुराणश्रवणारम्भे यथाविभवमात्मनः
आदौ सङ्कल्प्य विधिवद् ब्राह्मणं शुद्धवंशजम् ।
अव्यङ्गावयवं शान्तं स्वशाखं स्वपुरोधसम् ॥ ५० ॥
सर्वशास्त्रार्थतत्त्वज्ञं भूषणैरतिशोभनैः । वस्त्रचन्दनमाल्याद्यैर्वृणुयात्पाठसंश्रुतौ ॥
कृताञ्जलिपुटो भूत्वा ततःसम्प्रार्थयेद् द्विजम् ।

* इतः पर्यन्तःपाठः बङ्गवासीमुद्रितपुस्तकेऽधिक उपलभ्यते ।
मोहमयी ( मुम्बई ) लक्ष्मणपुर ( लखनऊ ) मुद्रितपुस्तकयोः मुनयऊचुरित्यारभ्य पुरुषोत्तमक्षेत्रमाहात्म्यसमाप्तिपर्यन्तः पाठोविशिष्टाध्याये सन्निवेशितः बङ्गवासीमुद्रितपुस्तके त्वस्मिन्नेवाध्याये प्रचलति खण्डसमाप्तिपर्यन्तम् ।



त्वं विष्णुर्विष्णुरेव त्वं न तु भेदः कदाचन ॥ ५२ ॥
निर्विघ्नं मे भवत्वेव त्वत्प्रसादात्प्रसीदच । ततो वृतं ब्राह्मणञ्च बहुमूल्यासने शुभे॥
वासयित्वा च तस्यैवगलेमालां विनिक्षिपेत् । मस्तके पुष्पगर्भैश्चचन्दनैरनुलेपयेत्
यस्मात्तस्मिंश्च समये विप्रो व्याससमोमतः ।
तेनैव ब्राह्मणेनैव पुस्तके विष्णुरूपके ॥ ५५ ॥
कारयेद्व्यासपूजाञ्च श्रीखण्डागुरुपुष्पकैः । नानोपचारैः रुचिरैर्भक्ष्यभोज्यादिकैरपि
भक्त्या चासनदानादिविधिः कार्यो दिने दिने ।
साम्प्रतं कथयाम्येवं श्रूयतां श्रोतृलक्षणम् ॥ ५७ ॥
गतानुगतिकानाञ्चनिवासार्थंतथाद्विजाः । आसनानि यथायोग्यं रचयित्वास्वयंतथा
शुभासनान्तरस्थो हि भवेदुत्कण्ठमानसः । अथवा संस्कृते देशे सर्वैःसह वसेद्भुवि
व्यासस्याऽग्रे निवसतिरासनेनोच्च एवच । कृतस्नानो मुदा युक्तो धारयञ्छुक्लवाससी
आचान्तः शङ्खचक्रादितिलकान्वितविग्रहः ।
मनसा भावयेद्विष्णुं विश्वासं कारयेद् भृशम् ॥ ६१ ॥
पुराणे ब्राह्मणे चैव देवे च मन्त्रकर्मणि । तीर्थे वृद्धस्य वचने विश्वासः फलदायकः
अतो मुनिवराःसर्वं पुण्यंविश्वासकारणम् । पाषण्डादिकसम्भाषंवृथालापमप्रयत्नतः
पुराणश्रवणे काले सर्वचिन्ताञ्च वर्जयेत् ।
अनेन विधिना विप्राः! प्रत्यहं शृणुयान्मुदा ॥ ६४ ॥
ततः पाठे समाप्ते च करतालादिकैर्मुहुः । जयकृष्ण! जगन्नाथ! हर इत्यादिनामभिः
विस्तारयेद्यथाकाशे श्रूयते शब्द एव सः । एवञ्च प्रत्यहं कुर्यात्प्रीतये मुरवैरिणः
ततो ग्रन्थसमाप्तौच विष्णुप्रीणनतत्परः । विशेषाद्वस्त्रमाल्यादिचन्दनैर्भूषणैस्तथा ॥
भूषयेत्परया भक्त्या विप्रं व्याससमं द्विजाः !॥ ६७ ॥
आत्मशक्त्याप्रदद्याच्चदक्षिणाम्वैयथाविधि । ये ये प्रदद्युर्यद्यच्च मत्तस्तच्छृणुताऽधुना
राजानः करिणो दद्युः साऽलङ्कारान्सुलक्षणान् ।
क्षत्रिया एवमेवञ्च ते वै राजसमा मताः ॥ ६९ ॥

ब्राह्मणाः पुस्तकांश्चैवविष्णोरर्चाकरंडिकाः । कनकंरजतश्चैव धान्यं वस्त्रंस्वभक्तितः
विशश्च रत्नभूषाढ्यान्सिन्धुदेशोद्भवानपि ।
गाश्च लक्षणसंयुक्ताः सवत्साश्च पयस्विनीः ॥ ७१ ॥
अन्यच्च कनकाद्यञ्च त्यजेर्युर्धर्मतत्परा । शूद्राः प्रदद्यः परया मुदा संयुतमानसाः ॥
वासांसि च सुवर्णं च धान्यं रत्नानि गास्तथा ।
नानाऽलङ्कारयुक्ताश्च घटोध्नीर्बालगर्भिणीः ॥ ७३ ॥
एवं वै दक्षिणां दद्याद्येनसन्तुष्यतेगुरुः । आत्मनःशक्तितोविप्राविक्तशाठ्यंनकारयेत्
शान्तिकं पौष्टिकं चैव व्रतोद्वाहादिकर्मच । मोक्षस्यसाधकं कर्म पुराणश्रवणं तथा
यज्ञादिकञ्च दानञ्च व्रतं नानाविधं तथा । यदिचेद्दक्षिणाहीनं तदा भवतिनिष्फलम्
असुराः कर्मणस्तस्यहरन्तिफलमेवतत् । यथास्त्रीणांचलावण्यंभर्तृस्नेहविवर्जितम्
युद्धात्पलायितानाञ्चपृष्ठंकृत्वाधनुष्मताम् । विनाधावनमश्वानां दुष्टत्वंहियथाद्विजाः
मूकत्वेनैव पाण्डित्यं सर्वशास्त्रविपश्चिताम् ।
हीनं दक्षिणया यद्यत्कर्म तद्वच्च निष्फलम् ॥ ७६ ॥
दानेन क्षीयतेयस्माद्दुरितानांकदम्बकम् । दक्षिणेतितथा विप्रागीयतेशास्त्रवेदिभिः
ततो विप्रान्भोजयेद्वै यथाशक्तिप्रकल्पितैः । कर्पूरेण च खण्डेन सर्पिषा पायसैर्युतैः
षड्विधैरन्नपानाद्यैः सुस्वादैरमृतोपमैः ।
तेभ्योऽपि स्वर्णवस्त्रादि यथाशक्त्या प्रदापयेत् ॥ ८२ ॥
एतद्वः कथितं सर्वं पुराणश्रवणस्यच । साङ्गोपाङ्गविधिश्चैव येनस्यात्सफलंत्विदम्
इदानीं भो मुनिश्रेष्ठाः! किमन्यज्ज्ञातुमिच्छथ ।

मुनय ऊचुः

अहोऽस्माकंमहाभाग्यंयत्पापौघविनाशनम् । पुराणश्रवणस्यैव फलमस्माभिरेव च
साङ्गोपाङ्गविधानञ्च श्रुतं त्वन्मुखपङ्कजात् ।
धन्याः स्म कृतपुण्याः स्म संसारे विगतज्वराः ॥ ८५ ॥
इदानीमात्मशक्त्या वै दीयतेभवते मुने । दक्षिणाफलसम्प्राप्तौ प्रसन्नस्त्वंगृहाणच



इत्युक्तवन्तो मुनयो ह्यकिञ्चनाः समित्कुशं पुष्पफलाक्षतादिकम् ।
क्लृप्त्वा च तस्मै मुनयः सुमुक्ताः क्षेत्रोत्तमं जग्मुरतिप्रहर्षिताः ॥ ८७ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णव-
खण्डान्तर्गतोत्कलखण्डेपुरुषोत्तमक्षेत्रमाहात्म्येजैमिनिऋषिसम्वादे
पुराणश्रवणसत्फलादिवर्णनंनामषष्टितमोऽध्यायः ॥ ६० ॥
समाप्तं श्रीपुरुषोत्तमं (जगन्नाथ) क्षेत्रमाहात्म्यम् ।

———०:*०:———